# जटालक्षणम्

शुभमस्तु

श्रीगणाधिपतये नमः

श्रीरस्तु

य इच्छन्ति जटां वक्तुं स विप्रो वेदवित्तमः
तस्य कीर्तिर्विवर्धेत स वेदफलमश्नुते १
पदद्वयमनुक्रम्य प्युत्क्रंम्योत्क्रंम्यसंधिमत्
यथावत्स्वरसंयुक्तं प्रयुञ्ज्यात्सा जटा मता २
संहिता प्रकृतिं प्रोक्ता पदस्यैतत्क्रमस्य तु
जटायाः प्रकृतिस्त्वेष एवं नित्यं निबोधत ३
जटायां वक्ष्यमाणायां कंपसंधिस्वरादयः
अवदाय प्रयोक्तव्या निपुणं तदुदीरितम् ४
प्रातिशाख्यादिशास्त्रज्ञः सर्वशीक्षाविशारदः
बुद्धिशक्तिसमेतो यः स जटां वक्तुमर्हत ५
लोपालोपोष सत्वेय त्वादेशादागमादि च
संहितायां यथा प्रोक्तं जटायां तद्वदेव हि ६
आरुषे यस्य नत्व स्याद्रेफयद्वविधानतः
मानुषेऽपि तथा भावस्तस्य स्यादन्यतो न तु ७
षणसत्वप्रगृह्याणां यथा पाठे विधीयते
व्युत्क्रमोच्चारणे तेषां विधिं व्याकरणात्स्मृतः ८
संहितायां तु यो वर्णः प्रग्रहत्वं विधानतः
स एव चक्रमेतत्वं जटायाश्चाभिगच्छति ९
पदद्वयनिमित्तं यदेकाभावेऽपि तत्र तु
संहितावत्क्रमो ज्ञेयस्तद्वद्ज्ञेया जटा मतैः १०
ह्रस्वभाजां तु सर्वेषां ह्रस्वता पूर्वपौरुषे
आदावन्ते च दीर्घं स्यान्नित्यमुत्तरपौरुषे ११
अन्क्रमो यथा पाठो ह्यादुषोऽप्युत्क्रमोत्क्रमौ

अन्यथा पदपूर्वौ हि तावदेताविति स्थितिः १२
स्वधा मापा असि परो ज्या आपूषा प्रबुध्निया
अमिनन्तं च सप्तैते न चार्षे संधिमाप्नुयुः १३
पृक्तदा पृक्ते दीर्घं स्यादुणे वर्णात्परस्य तु
अथवा देश ऊभावस्तत्तस्मात्सांहितादपि १४
चादिर्नमेववो लोपो मोलोपोक्षत्परस्य तु
स्थास्तन् भूरेवपूर्वस्य सस्य सर्वस्य नेष्यते १५
त्रिक्रमे वक्ष्यमाणे तु प्रथमं त्रिपदक्रमः
मध्यन्ताभ्यां ततस्तेषु न विशेषस्ततः परम् १६
त्रिक्रमे तु पदानां तु त्रयाणामेव रोहणम्
तथैवारोहणं तेषां पश्चादाङ्पूर्व इष्यते १७
अथ कम्पस्य
नित्योऽभिनिहितश्चैव क्षैप्रः प्रश्लिष्ट एव च
एते स्वाराः प्रकम्पन्ते यत्रोच्चस्वरितोदया १८
स्वरिते परभूते च स्वरितस्योत्तरार्धकम्
नीचं कार्यात्सकम्पश्च यथा दीर्घं तमुच्चरेत् १९
पदान्ते च तथा कम्पाः अन्ततो निहताणुकाः
शेषस्योदात्तता वा स्यात्स्वरिता वा व्यवस्थया २०
अदीर्घं दीर्घवत्कुर्याद्विस्वरं यत्प्रयुञ्ज्यते
कम्पोत्स्वराभिगीतानि ह्रस्वा कर्षणमेव तु २१
मध्ये तु कम्पयोतंपमुभौ पार्श्वौ समौ भवेत्
सरंगं कम्पयेत्कम्पं रथीवेति निदर्शनम् २२
स्वाराः कम्पाश्च रंगाश्च ये यत्काला स्वभावतः
वर्धन्ते प्रोच्यमानास्ते क्षिप्रयन्त्रेऽपि वक्तरि २३
स्वरितग्राह्यनुस्वारः तथा धरलवा अपि
परस्वरेण युक्तश्चेत्स्वरितग्राहिणो मतः २४

पपूर्वं स्वर्यते ह्रस्वा दीर्घंत्यांशे तदुत्तरौ
नादानुस्वारकावेव स्वर्यते पूर्वमुच्चवत्  २५
संयोगवर्जिते यत्र स पूर्वं स्वर्यते बुधैः
संयोगे परभूते च दीर्घांत्य स्वरितो भवेत्  २६
न प्लुतप्रग्रहौ चेति संधिकार्यं प्रयुज्यते
मात्रमेकं तु तत्कालं मात्राधिक्यं तु वा भवेत्  २७
पुनः सुवरकर्होतरंतं चर्पितश्चकः
अजीगरिति रेफेण सहावर्त्या पदावलि  २८
ह्वारभारादि सूत्रमुपयोगम्
दीर्घत्परो न कारादि पादमध्ये तु रेफभाक्
अतः परश्चेल्लोपं तु नान्यत्रैतद्वयं भवेत्  २९
अन्वित्यत्र ह्यकारस्य व्यञ्जने तं निमित्तके
जटायां नैव लोपः स्याद्यथा संहितमन्तरा  ३०
विधेर्मध्यस्थनासिक्यो न विरोधी भवेत्स्मृतः
तस्मात्कुर्वन्तु कार्याणी वर्णानां धर्मवे दिनः  ३१
संहितायां प्रकृत्या स्युर्न धामोक्तपदानि वै
जटायां संधिवत्कार्यं संहितायां न संधिवत्  ३२
अपृक्तस्याप्युकारस्य भवेतां दीर्घमागमौ
तत्तस्मादनयोर्दीर्घः भवेदन्यत्र वागमः  ३३
संहितायां तु यो दीर्घः व्यञ्जनेषु परेषु च
तद्ध्रस्वं पदकाले स्याज्जटायामपि तत्तथा  ३४
उपसर्गादिति धातौ ।
वासुप्यापिशलेः । यथा संहितमन्तरा ।
यथा संहितं विना इत्यर्थः ।
पूर्वोच्चारणे अन्वित्यत्राकारस्य जटायांतो पो न स्यात् ।
कार्यभाजः पदस्यैव तुरीयत्वं विधीयते ब्राह्मणेषु द्वितीयत्वं

पुनरुक्तः स्थलेन तु ३५

इति जटालक्षणं संपूर्णम्

Reference:
*Jaṭā Lakṣaṇam,* Mysore Governmental Oriental Manuscript Library, Telugu script on palm leaves, 3 folios, (P 4772/8).